# शास्त्रीयं-संस्कृतम्

अध्यापकः – तिलकः एम् राव्
tilaka.rao@mituniversity.edu.in

# शानच्

भक्तः वन्दते। गीतं शृणोति। - भक्तः वन्दमानः गीतं शृणोति।

1. सेवकः सेवते। पृच्छति।
2. भिक्षुकः याचते। वदति।
3. महेशः प्रार्थयते। ददाति।
4. छात्रः अधीते। लिखति।
5. शिशुः जायते। रोदिति।
6. वृक्षः म्रियते। अस्ति।

सेवमानः, याचमानः, प्रार्थयमानः, अधीयानः, जायमानः, म्रियमाणः

# अन्/आन

1. करोति - कुर्वन्
2. गच्छति - गच्छन्
3. पृच्छति - पृच्छन्
4. भवति - भवन्
5. पिबति - पिबन्
6. पठति - पठन्

1. सेवते - सेवमानः
2. याचते - याचमानः
3. प्रार्थयते - प्रार्थयमानः
4. अधीते - अधीयानः
5. जायते - जायमानः
6. म्रियते - म्रियमाणः

# शानच् - कर्मणि

| कर्तरि | कर्मणि | शानच् |
| --- | --- | --- |
| करोति | क्रियते | क्रियमाणः/णा/णम् |
| पठति | पठ्यते | पठ्यमानम् |
| लिखति | लिख्यते | लिख्यमानम् |
| ददाति | दीयते | दीयमानम् |
| शृणोति | श्रूयते | श्रूयमाणम् |
| नयति | नीयते | नीयमानम् |
| प्रक्षालयति | प्रक्षाल्यते | प्रक्षाल्यमानम् |
| त्यजति | त्यज्यते | त्यज्यमानम् |

1. सेवकः धनिकं सेवते। पृच्छति।
2. महेशः गुरुं प्रार्थयते। वदति।
3. छात्रः पुस्तकम् अधीते। पतति।

1. सेवकः धनिकं सेवमानः पृच्छति।
2. महेशः गुरुं प्रार्थयमानः वदति।
3. छात्रः पुस्तकम् अधीयानः पतति।

1. धनिकं सेवमानः सेवकः पृच्छति।
2. गुरुं प्रार्थयमानः महेशः वदति।
3. पुस्तकम् अधीयानः छात्रः पतति।

1. सेवकेन धनिकः सेव्यते। पृच्छति।
2. महेशेन गुरुः प्रार्थ्यते। वदति।
3. छात्रेण पुस्तकम् अधीयते। पतति।

1. सेवकेन धनिकः सेव्यमानः पृच्छति।
2. महेशेन गुरुः प्रार्थ्यमानः वदति।
3. छात्रेण पुस्तकम् अधीयमानं पतति।

1. सेवकेन सेव्यमानः धनिकः पृच्छति।
2. महेशेन प्रार्थ्यमानः गुरुः वदति।
3. छात्रेण अधीयमानं पुस्तकं पतति।

1. भिक्षुकः धनं याचते। पश्यति।
2. छात्रः पुस्तकम् अधीते। ददाति।
3. आपणिकः वस्तूनि विक्रीणीते। स्वीकरोति।

1. भिक्षुकः धनं याचमानः पश्यति।
2. छात्रः पुस्तकम् अधीयानः ददाति।
3. आपणिकः वस्तूनि विक्रीणानः स्वीकरोति।

1. धनं याचमानः भिक्षुकः पश्यति।
2. पुस्तकम् अधीयानः छात्रः ददाति।
3. वस्तूनि विक्रीणानः आपणिकः स्वीकरोति।

1. भिक्षुकेण धनं  याच्यते। महेशः ददाति।
2. छात्रेण पुस्तकम् अधीयते। गुरुः पश्यति।
3. आपणिकेन वस्तूनि विक्रीयन्ते। क्रेता स्वीकरोति।

1. भिक्षुकेण धनं याच्यमानं,  महेशः ददाति।
2. छात्रेण पुस्तकम् अधीयमानं, गुरुः पश्यति।
3. आपणिकेन वस्तूनि विक्रीयमाणानि, क्रेता स्वीकरोति।

1. महेशः भिक्षुकेण याच्यमानं धनं ददाति।
2. गुरुः छात्रेण अधीयमानं पुस्तकं पश्यति।
3. क्रेता आपणिकेन विक्रीयमाणानि वस्तूनि स्वीकरोति।

## शानच् - कर्तरि

1. धनिकं सेवमानः सेवकः पृच्छति ।
2. गुरुं प्रार्थयमानः महेशः वदति ।
3. पुस्तकम् अधीयानः छात्रः पतति ।

## शानच् - कर्मणि

1. सेवकेन सेव्यमानः धनिकः पृच्छति ।
2. महेशेन प्रार्थ्यमानः गुरुः वदति ।
3. छात्रेण अधीयमानं पुस्तकं पतति ।

| शानच् - कर्तरि | शानच् - कर्मणि |
| --- | --- |
| 1. धनं याचमानः भिक्षुकः पश्यति। | 1. महेशः भिक्षुकेण याच्यमानं धनं ददाति। |
| 2. पुस्तकम् अधीयानः छात्रः ददाति। | 2. गुरुः छात्रेण अधीयमानं पुस्तकं पश्यति। |
| 3. वस्तूनि विक्रीणानः आपणिकः स्वीकरोति। | 3. क्रेता आपणिकेन विक्रीयमाणानि वस्तूनि स्वीकरोति। |

| गिरीशः कार्यं करोति। | गिरीशेन कार्यं क्रियते। | गिरीशेन क्रियमाणं कार्यम्। |
|---|---|---|

1. बालकः ग्रन्थं पठति।
2. पिता धनं ददाति।
3. उमा स्यूतं नयति।
4. रावणः रामं निन्दति।
5. रमा शालां पश्यति।
6. बालिका जलं पिबति।
7. छात्रः प्रश्नं पृच्छति।
8. लता शाटिकां प्रक्षालयति।
9. उमेशः पत्रं प्रेषयति।
10. लेखकः कथां लिखति।
11. नन्दिनी गीतं शृणोति।
12. हरीशः द्विचक्रिकां क्रीणाति।

पठ्यते, दीयते, नीयते, निन्द्यते, दृश्यते, पीयते, पृच्छ्यते, प्रक्षाल्यते, प्रेष्यते, लिख्यते, श्रूयते, क्रीयते

गिरीशः कार्यं करोति। गिरीशेन कार्यं क्रियते। गिरीशेन क्रियमाणं कार्यम्।

1. कर्मकरः कार्यं करोति।
2. उमा लेखनीम् आनयति।
3. माता पुत्रम् आह्वयति।
4. बालः चाकलेहं खादति।
5. उमेशः ग्रामं गच्छति।
6. लता श्लोकं गायति।
7. वृद्धः दण्डं गृह्णाति।
8. बालिका कथां शृणोति।
9. छात्रः विषयः स्मरति।
10. हरीशः कूपीं स्वीकरोति।

क्रियते, आनीयते, आहूयते, खाद्यते, गम्यते, गीयते, गृह्यते, श्रूयते, स्मर्यते, स्वीक्रियते